..........................[1] प्रात्यँ सिँहचर्मण्यभिषिञ्चन्त्यृषभचर्माध्यधि धारयन्ति—सहस्रशीर्षो पुरुषे इति[2] शतकृष्णलँ रुक्मँ शतातृण्णमुपरिष्टाद्धाति हिरण्यगर्भ[3] इति पूर्वासाँ सप्तानां प्रथमानां पुरस्तादपानभृत इत्युपरिष्टान्मासनामानि हुत्वा प्रातर्हस्तं[4] गृह्णाति ॥ ५ ॥ जागतान्विष्णुक्रमान्क्रामति ॥ ६ ॥ प्राजापत्यं चरुशेषं पालाशपात्रेष्वासिच्य[5] मध्यतःकारिणोऽभिषिञ्चन्ति ॥ ७ ॥ वि रक्षो वि मृधो जहीति[6] मुखँ विमृष्टे ॥ ८ ॥ प्रचरणकाल उत्तरत आहवनीयस्य वैतसे कटेऽश्वस्यावद्यति तैजने दक्षिणतोऽन्येषां पशूनाम् ॥ ९ ॥ पुरस्तादाहवनीये वैतसं कटमास्तीर्य तस्मिन्प्राजापत्यान्संचिनोति प्राञ्चमश्वं प्राञ्चं तूपरं प्रत्यञ्चं गोमृगमिति ॥ १० ॥ शादं दद्भिः स्वाहावकान्दन्तमूलैः स्वाहेति[7] पर्यायैद्यावापृथिवी वर्तोभ्यामित्येतस्य[8] पुरस्तादरण्येऽनुवाक्येन गणेन जुहोति ॥ ११ ॥ उदुह्य[5] जांवुकं[5] पूषणँ वनिष्ठुनां[9] ॥ मा नो मित्रः[10] ॥ समिद्धो अञ्जन्निति[11] त्रिभिरनुवाकैराहुतीर्जुहोति ॥ १२ ॥ द्विपदाभिरन्ततो[12] हुत्वा स्विष्टकृतं प्रत्यश्वलोहितं जुहोति—अग्नये स्विष्टकृते स्वाहेति गोमृगकण्ठेनाश्वशफेन चरुणा[5] ॥ १३ ॥ सर्वस्तोमोऽतिरात्र उत्तममहः ॥ १४ ॥ ऐकादशिनानालभते ॥ १५ ॥ समानमावभृथात् ॥ १६ ॥ आवभृथके कर्मणि कृते शुक्लस्य खलतेर्विक्लिधस्य पिङ्गाक्षजटिलगांभवस्यावभृथमवस्नुतस्य[13] मूर्धनि जुहोति—जम्बुकाय स्वाहा ब्रह्महत्यायै स्वाहेति ॥ १७ ॥ नव सौरीर्वशा श्वेता अनुबन्ध्याः ॥ १८ ॥ तासाँ वपासु हूयमानासु प्रतिवातं पापकृतस्तिष्ठेताध्वर्युः पापान्मुच्यते ॥ १९ ॥ पापाद्वासवपाश्वँ सत्वार्प्तं तस्मिन्साण्डं त्वाष्ट्रँ सकिकिदीविविदीगयमित्युपाकरोति ॥ २० ॥ सोदवसनीये सँस्थिते पशुबन्धेन यजते ॥ २१ ॥ त्रिशाखो यूपोऽष्टाश्रयः शाखापृथुकपालानि[5] तन्त्रँ स्वरुरपहरति[5] ॥ २२ ॥ त्वैतानां[5] प्रथमः कालकमेविवभ्रुस्तं[5] मध्यमे विशाखयूप आश्विनमालभेत ॥ २३ ॥ तयोर्द्वितीयस्तं भौमं दक्षिणार्धे ॥ २४ ॥ यस्तृतीयस्तमूर्जं उत्तरार्धे ॥ २५ ॥ पशूनां पुरोडाशमनु मृगारेष्टिं निर्वपति ॥ २६ ॥

1 The lacuna is filled up by युञ्जन्ति ब्रध्नं ··· अमूरजेति (III. 4. 3. 25-40). Then follows the single word प्रत्यावर्तयति. The numbering of the sūtras is wholly provisional.

2 Neither the sūkta nor the verse occur in our MS, but it may have formed a part of the Āraṇyaka.

3 MS III. 12. 16: 165. 1.

4 ? The sequence of the acts is also disturbed.

5 ?

6 The formula is not derived from MS.

7 The ms adds स्विष्टकृत् इति.

8 MS III. 15. 1.

9 MS III. 15. 9.

10 MS III. 16. 1.

11 MS III. 16. 2.

12 Cp Āp XX. 21. 14.

13 The text is partly corrupt.

सहस्विष्टकृदिडं मृगारेष्टिपशुपुरोडाशानां च ॥ २७ ॥ तस्मिन्सँस्थिते द्वादश ब्रह्मौदनान्श्रपयति ॥ २८ ॥ तान्महर्त्विजः प्राश्नन्ति ॥ २९ ॥ तेभ्यो द्वादश द्वादश रुक्मान्ददाति ॥ ३० ॥ संतिष्ठते ऽश्वमेधः ॥ ३१ ॥ तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्याँ[1] यो ऽश्वमेधेन यजते[2] यश्चैव देविकाप्रभृतिभिरिष्टिभिर्यजते यजते[3] ॥ ३२ ॥

इत्यश्वमेधे [ चतुर्थे ऽध्याये ] पञ्चमं खण्डम् ॥

इति चतुर्थो[4] ऽध्यायः ॥

---

1 The ms adds तरति.

2 Cp ŚatBr XIII, 3, 1, 1.

3 Instead of the second यजते the ms has: अध्यायसमाप्तौ द्विरभ्यासः श्रान्तो वाचार्यः.

4 The ms पंचमो.

# VĀRĀHA-ŚRAUTA-SŪTRA

BEING

THE MAIN RITUALISTIC SŪTRA
OF THE MAITRĀYAṆĪ ŚĀKHĀ

CRITICALLY EDITED

FOR THE FIRST TIME

BY

**Dr W. CALAND**
and
**Dr RAGHU VIRA**

*Published by*

MEHARCHAND LACHHMANDAS
ORIENTAL & FOREIGN BOOKSELLERS
2736, Kucha Chailan, Daryaganj, Delhi-6. (India)

*Sale Depot :* Street No. 1, 1 Ansari Road, Daryaganj. Delhi-6